दृश्यसर्वप्रपञ्चस्तु ह्यनित्य इति वेदनम् ।
नित्याऽनित्यविवेकोऽयं, अथ वैराग्यमुच्यते ॥

आमुष्मिके स्वर्गसुखमैहिके स्त्र्यादिभोगजम् ।
वान्तादिवच्च तत्सर्वं त्याज्यं वैराग्यमीर्यते ॥

शमो दमश्चोपरतिः तितिक्षा श्रद्धया सह ।
समाधानं च षट्संख्यमेतेषां वच्मि लक्षणम् ॥

शमो मनोनिग्रहः स्याद्दमो बाह्याक्षनिग्रहः ।
तथा चोपरतिस्सर्वकर्मणां[1] त्याग उच्यते ॥

तितिक्षा सुखदुःखादिसहनं कथ्यते बुधैः ।
गुरूपदिष्टवाक्येषु प्रीतिश्श्रद्धा समीरिता ॥

वेदान्तवाक्यश्रवणं मुक्त्वाऽन्यत्र गतं मनः ।
आकृष्य स्थापनं तस्मिन् समाधानं प्रकीर्तितम् ॥

मोक्षेच्छा द्विविधा प्रोक्ता मोक्षो भूयान्ममेति या ।
साधारणेच्छा सा प्रोक्ता, तीव्रेच्छाऽन्या वदामि ताम् ॥

गृहे दग्धे स्थितस्तस्मिन् पुमान् यद्वत् पलायते ।
तापत्रयप्रतप्तस्य तथेच्छा तीव्रसंज्ञिका ॥

---

1. उपरतिः—"अत्र 'उपरम' शब्देन संन्यासोऽभिधीयते । तथा संन्यासिनामेव श्रवणादावधिकारः इति केचित् । अन्ये तु "उपरम" शब्दस्य संन्यासवाचकत्वाभावात् विक्षेपाभावमात्रस्य गृहस्थेष्वपि संभवात् जनकादेरपि ब्रह्मविचारस्य श्रूयमाणत्वात् सर्वाश्रमसाधारणं श्रवणादि विधानं इत्याहुः" इति वेदान्तपरिभाषाकाराः ।

तापत्रयप्रकारं तु शृणु वक्ष्यामि बालक।
आध्यात्मिकमिति प्रोक्तं नेत्ररोगादिसंकटम् ॥
आधिभौतिकमित्युक्तं चोरव्या[ला](घ्रा)दि पीडनम्।
आधिदैविकमित्याहुर्महातापादिसंकटम् ॥
एवं ज्ञात्वा पुमान् शीघ्रमात्मानात्मविचारणे।
यत्नं कुर्यात् ततस्सम्यगात्मज्ञानं प्रजायते ॥

शिष्यः—

सद्गुरो वद मे सम्यगात्मानात्मादि लक्षणम् ॥

॥ आत्मस्वरूपम् ॥

गुरुः—

आत्मा [1]देहत्रयातीतो [2]गुणत्रयविवर्जितः।
अवस्थात्रय[3]साक्षी च [4]पञ्चकोशविलक्षणः ॥
कालत्रये[5]ऽप्यबाध्यत्वात् सद्रूप इति विश्रुतः।
चिद्रूपस्सर्वसाक्षित्वादखण्डो व्यापकत्वतः ॥
परप्रेमास्पदत्वाच्चानन्दरूपस्स[6] उच्यते।

---

1. स्थूलं सूक्ष्मं कारणं इति देहत्रयम्।
2. सत्वं रजः तम इति गुणत्रयम्।
3. जाग्रत्-स्वप्न-सुषुप्तिरिति अवस्थात्रयम्।
4. अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया पञ्चकोशाः।
5. भूतभविष्यद्वर्तमानकालाः कालत्रयम्।
6. इयमात्मा परानन्दः परप्रेमास्पदं यतः।
मा न भूवं हि भूयासं इति प्रेमात्मनीक्ष्यते ॥ पञ्चदशी-१-८·

निष्कलो निष्क्रियश्शान्तो नित्यानन्दरसात्मकः ।
सत्यज्ञानानन्तरूपः परमात्मा [1]परात् परः ॥
ध्यायेदेवं सदाऽऽत्मानं तेन ज्ञाता[2]भविष्यसि ॥

॥ अनात्मस्वरूपम् ॥

देहत्रयं तथाऽवस्थात्रितयं कोशपञ्चकम् ।
चतुर्विंशतितत्त्वानि त्वनात्मेति बुधा जगुः ॥
देहत्रयं स्थूलसूक्ष्मकारणानीति तेषु वै ।
स्थूलं त्वक्चर्ममांसादि सप्तधातुसमन्वितम् ॥
नवद्वारसमायुक्तं नखलोमादिसंयुतम् ।
क्रिमिमूत्रपुरीषादि पूरितं सर्वदूषितम् ॥
शुक्लशोणितसंज्ञातं मूत्रद्वाराद्विनिर्गतम् ।
जायतेऽस्त्यादिषड्भावविकारैश्च[3] समन्वितम् ॥
पञ्चीकृतमहाभूतसंभवं कर्मसञ्चितम् ।
शरीरं सुखदुःखानां भोगायतनमुच्यते[4] ॥
नरकाख्ये गर्भवासे नानाकष्टसमन्विते ।
आवासस्सर्वजन्तूनां दुस्सहो बहुदुःखदः ॥

---

1. परात् अक्षरात् परः निरुपाधिकः पुरुषः ।
2. ज्ञानी भविष्यसि इत्यर्थः ।
3. जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति —निरुक्तम् I, ii, 8.
4. आत्मबोधः—१२

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्[1] ॥
अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत्[2] ॥
इन्द्रियैर्विषयग्राहो जाग्रत्संज्ञः प्रकीर्तितः ।
स्थूलाभिमानी विश्वश्च व्यावहारिक इत्यपि ॥
एवं चिदाभास[3] इति त्रीणि नामानि तस्य तु ॥
स्वप्नावस्थं प्रवक्ष्यामि करणोपरमे द्विज ।
जाग्रत्संस्कारजस्फूर्तिः स्वप्नस्य विषयस्मृता ॥
तस्याभिमानी तैजसः स्वप्नकल्पित इत्यपि ।
प्रातिभासिक इत्येवं नामत्रयमुदीरितम् ॥
सर्वप्रकारज्ञानोपसंहारस्सुप्तिरुच्यते ।
बीजात्मना स्थितिर्बुद्धेः सुषुप्तौ परिकीर्तिता ॥
तदवस्थाभिमानी च प्राज्ञोऽनच्छिन्न इत्यपि ।
पारमार्थिक इत्येवं नामत्रयमुदीरितम्[4] ॥

---

1. आत्मबोधः—१३
2. आत्मबोधः—१४
3. अन्तःकरणगतः चिदाभासः इत्यर्थः ।
4. दृग्दृश्यविवेके श्रीविद्यारण्यस्वामिभिः इयं त्रित्वैविध्यप्रक्रिया आलम्बिता इति सिद्धान्तलेशसंग्रहकाराः श्रीअप्पय्यदीक्षितेन्द्राः । सिद्धान्तलेशसंग्रहः–पृ· १०० [भाऊशास्त्रिणा संशोध्य मुद्रितपुस्तके]

## ॥ पञ्चकोशविवेकः ॥

प्रकारं[1] पञ्चकोशानां वक्ष्यामि शृणु सुव्रत ।
अन्नमयः प्राणमयो मनोज्ञानमयावुभौ ॥
आनन्दमय इत्येते पञ्चकोशाः प्रकीर्तिताः ।
शिरः पाण्यादिमान् स्थूलः कोशोऽन्नमय ईरितः ॥
कर्मेन्द्रियप्राणसङ्घः कोशः प्राणमयो भवेत्[2] ।
मनोधीन्द्रियसङ्घश्च मनोमयं इतीर्यते[3] ॥
बुद्धिज्ञानाक्षसङ्घश्च विज्ञानमय उच्यते[4] ।
तमोमयी बुद्धिवृत्ति[5] रानन्दमय उच्यते ॥
एवं तु पञ्चकोशानां प्रकारः परिकीर्तितः ।
चतुर्विंशतितत्त्वानि शृणु वक्ष्यामि बालक ॥

---

1. प्रकारं—स्वरूपमित्यर्थः ।
2. एते प्राणादयः पञ्च पञ्चकर्मेन्द्रियैः सह ।
   भवेत् प्राणमयः कोशः स्थूलो येनैव चेष्टते ॥
   सर्ववेदान्तसिद्धान्तसारसंग्रहः—३८९.
3. मनो मनोमयः कोशः भवेज्ज्ञानेन्द्रियैः सह ।
   प्राचुर्यं मनसो यत्र दृश्यतेऽसौ मनोमयः ॥
   सर्ववेदान्तसिद्धान्तसारसंग्रहः—३५५.
4. विज्ञानमयः कोशः स्यात् बुद्धिः ज्ञानेन्द्रियैः सह ।
   सर्ववेदान्तसिद्धान्तसारसंग्रहः—३५०.
   सङ्कल्पात् मनः, अर्थस्य निश्चयात् बुद्धिः, इति एकस्यैव अन्तःकरणस्य वृत्तिभेदेन द्वैविध्यं बोध्यम् ।
5. तमोमयी बुद्धिवृत्तिः—विलीनावस्था बुद्धिरित्यर्थः ।

दशेन्द्रियाणि भूतानि पञ्च शब्दादिपञ्चकम् ।
मनोबुद्धिरहङ्कारश्चित्तं वृत्ति[1] चतुष्टयम् ॥

॥ ब्रह्मज्ञानन्तरङ्गसाधनम् ॥

श्रवणं मननं चैव निदिध्यासनमेव च ।
अनुष्ठेयानि चैतानि ज्ञानस्य साधनानि हि[2] ॥

वेदान्तवाक्यग्रहणं[3] यत्तच्छ्रवणमुच्यते ।
श्रवणार्थानुसन्धानं[4] मननं परिचक्षते ॥

ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापनं तु यत् ।
एकतानत्व[5]मेतद्धि निदिध्यासनमुच्यते ॥

॥ वासनाक्षयोपायः ॥

"लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥

---

1. वृत्तिचतुष्टयम्—वृत्तिभेदेन चतुर्विधमन्तःकरणमित्यर्थः ।
2. मैत्रेयीब्राह्मणे आत्मज्ञानसाधनत्वेन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रवणमनननिदिध्यासनानि विहितानि ।
3. वेदान्तवाक्यग्रहणं—वेदान्तवाक्यार्थनिर्धारणमित्यर्थः ।
4. श्रवणार्थानुसन्धानं—श्रवणविषयीभूतार्थानुसन्धानम् ।
5. एकतानत्वं—एकाग्रता

लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु"[1] ॥

शिष्यः—

जगत्सृष्टेः प्रकारं मे वद श्रीगुरुनायक ।

॥ जगत्सृष्टिक्रमः ॥

गुरुः—

प्रकृतिः त्रिगुणाकारा विक्षेपावरणात्मिका[2] ।
अध्यस्ता ब्रह्मणि परे तमोमोहादिसंज्ञिता ॥

---

1. विवेकचूडामणिः—२७२, २७१.
लोकवासना—सर्वे जना यथा मां न निन्दन्ति, यथा वा स्तुवन्ति, तथैव सर्वथाऽऽचरिष्यामि इत्यभिनिवेशो लोकवासना ।
शास्त्रवासना च त्रिविधा - पाठव्यसनं, बहुशास्त्रव्यसनं, अनुष्ठानव्यसनं चेति ।
देहवासनाऽपि आत्मत्वगुणाधानदोषापनयनभ्रान्तिभेदात् त्रिधा ।
एतद्विषयप्रपञ्चस्तु श्रीविद्यारण्यस्वामिप्रणीतजीवन्मुक्तिविवेके द्रष्टव्यः ।

2. "नास्त्यद्वयं ब्रह्म, न प्रकाशते" इति व्याहरयोग्यता आवरणं तत्प्रयोजकशक्तिः आवरणशक्तिः; "अहं कर्ता, भोक्ता" इति भ्रमजननशक्तिः विक्षेपशक्तिः । आवरणविक्षेपशक्तिद्वयात्मिका इत्यर्थः ।
आत्मोपाधेरविद्याया अस्ति शक्तिद्वयं महत् ।
विक्षेप आवृतिश्चेति याभ्यां संसार आत्मनः ॥
सर्ववेदान्तसिद्धान्तसारसंग्रहः—४८८

प्रकृतिस्सा द्विधा प्रोक्ता माया [1]शुद्धगुणात्मिका ।
[2]मलिनत्रिगुणोपेता ह्यविद्येति प्रकीर्तिता ॥

जीव इत्युच्यतेऽविद्या प्रतिबिम्बितचेतनः ।
मायावच्छिन्नचैतन्यमीश इत्युच्यते बुधैः ॥

अव्याकृतोऽन्तर्यामीति तस्य नामद्वयं स्मृतम् ।
तस्मादीशात् महत्तत्वं[3] समुत्पन्नमिवाङ्कुरम् ॥

हिरण्यगर्भनामा स्यात्तदवच्छिन्नचेतनः ।
सूत्रात्मा प्राण इत्येते विद्यते तस्य नामनी ॥

तत्त्रैगुण्यात्मकमहत्तत्त्वावच्छिन्नचेतनात् ।
वृक्षस्थानापन्नमहङ्कारतत्त्व[4]मजायत ॥

तदवच्छिन्नचैतन्यं विराड्वैश्वानरस्तथा ।
वैराजश्चेति नामानि प्रोक्तानि श्रुतिवित्तमैः ॥

तदहङ्कार्य[5]वच्छिन्नचैतन्यात् त्रिगुणात्मकः ।
आकाशः शब्दगुणकः समुत्पन्नस्ततः क्रमात् ॥

---

1. शुद्धगुणात्मिका—शुद्धसत्त्वप्रधाना इत्यर्थः ।
2. मलिनत्रिगुणोपेता – मलिनसत्त्वप्रधानत्रिगुणोपेता । पञ्चदशी १—१६·
3. महत्तत्त्वं—समष्टिलिङ्गशरीरम् ।
4. अहङ्कारतत्त्वं—समष्टिस्थूलशरीरम् ।
5. अहङ्कारि—अहमित्यभिमन्तृ ।

शब्दस्पर्शगुणो वायुस्तेजस्तु त्रिगुणैर्युतम् ।
आपश्चतुर्गुणोपेता भूमिः पञ्चगुणैर्युता ॥

एवं शब्दस्पर्शरूपरसगन्धैः समन्विता ।
भूमिः, तस्याः ओषधयः ताभ्यश्चान्नं प्रजायते ॥

अन्नात् पुरुषसंभूतिः सर्वे प्राणिन एव च ।
अन्नादेव प्रजायन्ते जीवन्त्यन्नेन वै ततः ॥

एवं सृष्टिक्रमः प्रोक्तः तव वेदानुसारतः ।
सृष्टिर्नानाप्रकारेण श्रूयते श्रुतिषु द्विज ॥
कल्पभेदेन ते भेदा इत्यूह्यन्ते मनीषिभिः ॥

शिष्यः—

अध्यस्तेत्युच्यते माया परे ब्रह्मणि सद्गुरो ।
कथं ब्रह्मणि साऽध्यस्ता[1] तत्प्रकारं गुरो वद ॥
अपि च श्रोतुमिच्छामि मायाऽविद्यादिसंभवम् ॥

॥ मायाऽविद्यास्वरूपादिनिरूपणम् ॥

गुरुः—

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वं इदं जगत्[2] ॥

---

1. अविद्यायाः अध्यस्तत्वे, अविद्यायाः उत्पत्तौ तस्यैव हेतुत्वे आत्माश्रयः; तत्कार्यस्य हेतुत्वे अन्योन्याश्रयः; अविद्यान्तरस्य हेतुत्वे अनवस्थादिकम् । तथा च कथं ब्रह्मणि अविद्यारूपा माया अध्यस्ता भवितुमर्हति इति भावः ।
2. श्वेताश्वतरोपनिषत्—४ – १०.

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[1] ॥
एवं श्रुतिस्मृतिभ्यां च धर्मधर्मिस्वभावतः ।
स्वाधीनमायश्चात्मेति सर्वथा परिकीर्तितः ॥
सा माया ब्रह्मणो नान्या ब्रह्मणश्शक्ति[2]रेव हि ।
सा चैव मूलप्रकृतिः विक्षेपावरणात्मिका ॥
अविद्येति च सा प्रोक्ता तमोमोहादिसंज्ञिका ।
अव्यक्तं गुणसाम्यं च सर्वं मायाभिधां विदुः ॥
सर्वाधिष्ठानचैतन्ये मायाऽध्यस्तेति या तु सा ।
स्वशक्तिर्ब्रह्मणः स्वस्मिन् स्वेनैव च विजृम्भिता[3] ॥
ज्ञातव्यमेवं विद्वद्भिरन्यथा न कदापि च ॥
जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥
इत्यादिभिस्तु स्मृतिभिर्मायाऽविद्यादिसंभवः ।
वक्तुं न शक्यं केनाऽपि तस्मान्मायाद्यनादि वै ॥
मायाकार्यं महच्चित्रमचिन्त्यं मनसाऽपि तत् ।
मायादेरादिशून्यस्याप्यन्तस्स्यात् प्रागभाववत्[4] ॥

---

1. भगवद्गीता, ७-१४
2. शक्तिः—कार्यजननसामार्थ्यसंपादिनी ।
3. विजृम्भिता—स्फुरिता ।
4. कार्यस्योपत्तेः प्राक् विद्यमानोऽभावः प्रागभावः, स अनादिः; कार्यस्योपत्तौ तु निवर्तते, तद्वत् इत्यर्थः ।

महान्तो ब्रह्मनिष्ठास्तु स्वरूपेणैव संस्थिताः ।
कुतो माया कुतोऽज्ञानं तेषां पक्षे महात्मनाम् ॥

मायादीनां तु तस्माद्धि विनाशश्चोच्यते बुधैः ।
जगन्मिथ्येति यो वेत्ति जितमायस्स उच्यते ॥

मायाप्रवेशस्तस्मिंश्च नास्ति किञ्चिन्न संशयः ।
जगत्सत्ताऽभ्युपगमे माया सर्वस्य कारणम्[1] ॥

प्रोच्यते पण्डितैस्सम्यग्वेदविद्भिर्महत्तमैः ।
अद्वैतपक्षे शून्यत्वं मायाया युज्यते भृशम् ॥

या मा सैव हि मायेति श्रुतिवाक्यं च दृश्यते ।
गुरूपदिष्टवाक्येन मायिनं तु महेश्वरम् ।
ज्ञात्वा यो ध्यायति सदा तस्य मायाऽतिदूरगा[2] ॥

मायया मोहिताश्शेषाः सर्वे संसारसागरे ।
मग्ना जन्मजरायन्त्रे लग्नास्तत्र भ्रमन्ति हि[3] ॥

---

1. सर्वस्य कारणं माया; सा जगत्सत्ताऽभ्युपगमेऽपि कारण प्रोच्यते इति संबन्धः ।

2. "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैः जन्ममृत्यु प्रहाणिः तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥" इति श्वेताश्वतरोपनिषद्वाक्यं [१-११ ] अर्थतो अनुवदति - ज्ञात्वा यो ध्यायति इति ।

3. "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" इति भगवद्गीतावाक्यं [५—१५] अर्थतो अनुवदति—"मायया मोहिता" इति । "अज्ञानेन आवरण

शिष्यः—

अभिन्ना ब्रह्मणो माया ब्रह्मणश्शक्तिरेव सा ।
इत्युक्त्वाऽस्यास्तु मायाया विनाशमपि चक्षसे ।
आत्मशक्तेः कथं नाशस्संभविष्यति तद्वद ॥

गुरुः—

आत्मशक्तेर्विनाशस्तु न कदापि मयोच्यते ।
आत्मानात्मविचारेण कृपया च गुरोस्ततः ॥
ब्रह्मज्ञानं तु यस्यापि जायते चेत्समन्ततः ।
प्रजहाति च तं माया जितमायस्तदोच्यते ॥
तस्माद्धि तस्य पक्षे तु मायाऽभावः प्रकीर्तितः ॥

शिष्यः—

तर्हि शक्तेः शक्तिमतोऽनादित्वं (हि) प्रसज्यते ।
अङ्गीकृतेऽपि दोषः स्यात् द्वैतवादि प्रवेशिता ॥

गुरुः—

शक्तिः शक्तिमतो नान्या यथा वन्हेस्तथात्मनः ।
विजानीहि तयोरैक्यं[1] श्रुत्या[2] युक्त्या[3] च हे द्विज ॥

---

विक्षेपशक्तिमता मायाख्येन......आवृतं आच्छादितं ज्ञानं..... स्वप्रकाशं सच्चिदानन्दरूपमद्वितीयंपरमार्थसत्यं तेन स्वरूपावरणेन मुह्यन्ति..........जन्तवः संसारिणः वस्तुस्वरूपादर्शिनः इति गूढार्थदीपिकोक्तोऽर्थः अत्र अनुसन्धेयः ॥

1. ऐक्यं—पृथक्सत्ताराहित्यम् ।
2. "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [श्वेताश्वतरोपनिषत्-६-८] इति श्रुतौ अविद्याशक्तेः स्वाभाविकत्वं उक्तम् ।
3. युक्तिश्च "न लोके चैत्रतच्छक्त्योः जीवितं लिख्यते पृथक्" [२-५१] इति पञ्चदश्युक्ता अत्र अनुसन्धेया ।

शिष्यः—

जीवेशादिपदार्थानां षण्णामस्तीत्यनादिता ।
उक्ता सा कथमद्वैतपक्षे सिद्ध्येद्गुरो वद ॥

॥ द्वैतस्य व्यावहारिकत्वम् ॥

गुरुः—

व्यावहारिकसत्तायमनादित्वं हि युज्यते ।
षण्णामखण्डबोधैकरसे ज्ञाते न किञ्चन ॥

चैतन्यमेकं सर्वत्र निर्मलाकाशवत् सदा ।
प्रकाशते ज्ञानचक्षुस्स्वरूपेणैव पश्यति ।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥

शिष्यः—

सर्वेषु च शरीरेषु भिन्नो वा[1]ऽऽत्मा गुरो वद ।

॥ आत्मैकत्वं, अज्ञानस्य सर्वानर्थमूलत्वं च ॥

गुरुः—

आत्मा सर्वत्र संपूर्णो ह्यखण्डैकरसोऽव्ययः ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः[2] ॥

अभिन्नस्सर्वदेहेषु सर्वज्ञः सर्वतोमुखः ।
अभिन्नाश्चात्मनो जीवा भिन्नाश्चोपाधिभेदतः ॥

---

1. 'वा' शब्दस्वारस्यात् "अभिन्नो वा" इत्यर्थः ।
2. भगवद्गीता—२-२४.

तत्तत्कर्मविभेदाच्च[1] दृश्यन्ते भिन्नरूपतः ।
ततस्सुकृतबाहुल्यात् साधुसाङ्गत्यसंश्रयात् ।
कालान्तरे च जीवस्तु मुच्यते कृपया गुरोः ॥

तदात्मब्रह्मणोस्सोऽयं देवदत्तवदीर्यते ।
ऐक्यं द्वैतमतध्वान्तभानुमद्भिर्महत्तमैः ॥

अज्ञानमेव सर्वत्र सर्वानर्थस्य कारणम् ।
अज्ञानादभिमानश्च जायते स्वेषु वस्तुषु ॥

ततः पुत्रादिवर्गेषु भृशं रागोऽभिवर्धते ।
तेषां विरोधो[2][के](ये)नापि क्रियते चेत्तदा तदा ॥
क्रोधमात्सर्यलोभाद्या[3]जायन्ते स्वत एव तु ।
कामक्रोधादिभिस्सर्वे कर्म कुर्वन्ति[4] मानवाः ॥

---

1. उपाधिभेदात् भिन्नाः जीवाः पुनश्चकर्मभेदात् नानाजात्यादिरूपेण भिन्नाः दृश्यन्ते ।
2. विरोधः - अपकारः ।
3. अप्राप्तवस्त्वभिलाषः कामः, रागस्तु प्राप्तेऽपि वस्तुनि पुनस्तदधिकप्राप्तितृष्णा । घनतृष्णा लोभः ।
   रागविषयविनाशके समुपस्थिते तन्निवारणसामर्थ्यमात्मनो मन्यमानस्य तस्मिन् प्रतिकूले दुःखहेतौ अभिज्वलनात्मकः चित्तवृत्तिविशेषः द्वेषः स एव क्रोधः। परोत्कर्षसहनपूर्विका स्वोत्कर्षवाञ्छा मत्सरः, तस्य भावः मात्सर्यम् ।
4. काम एष क्रोध एष इत्यादिवचनं स्मृतेः ।
   प्रवर्तको नापरोऽतः कामादित्यवसीयते ॥
   बृहदारण्यकवार्तिकम्—1-4-1827

2

कर्मानुभवसिद्ध्यर्थं शरीरं जायते क्रमात् ।
शरीरग्रहणाद्दुःखं जायते देहिनां भुवि ॥

मरणं जननं चैव जायते च पुनः पुनः ।
एवं देहवतां[1] दुःखं वर्धते च ततस्ततः ॥

सुखलेशोऽपि नास्त्येव सर्वथा दुःखमेव हि ।
यत्सौख्यमिह चाभाति परिणामे तु दुःखदम् ॥

अज्ञानमेव दुःखस्य कारणं शिष्य सर्वथा ।
ज्ञानं यदा निश्चलं स्यादभिमानो विनश्यति ।
ततो नश्यति देहान्तं दुःखकारणमञ्जसा[2] ॥

॥ चित्तशुद्ध्युपायः ॥

शिष्यः—

कथं चित्तस्य नैर्मल्यं भवेदिह गुरो वद ।

---

1. देहवतां - देहाभिमानिनाम् ।
2. अञ्जसा - निःसंशयम् ।
अत्रेदं नैष्कर्म्यसिद्धौ सुरेशार्यवचनं अनुसन्धेयम्—
"दुःखस्य.........देहोपादानैकहेतुत्वात् देहस्य च पूर्वोपचितधर्माधर्ममूलत्वात्...........तयोश्च विहितप्रतिषिद्धकर्ममूलत्वात्..........कर्मणश्च रागद्वेषास्पदत्वात् रागद्वेषयोश्च शोभनाशोभनाध्यासनिबन्धनत्वात् अध्यासस्य चाविचारितसिद्धद्वैतवस्तुनिमित्तत्वात् द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वतस्सिद्धाद्वितीयात्मानवबोधमात्रोपादानत्वात्......सर्वानर्थहेतुः आत्मानवबोध एव" इति ॥

गुरुः—

चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।[1]
इति स्मृत्या च निष्कामः कुरु कर्म यथामति ॥
तेन निर्मलचित्तोऽसि[2] मार्गमन्यं च वच्म्यहम् ।
यावत् प्रीतिर्वर्तते ते स्वजनेषु च वस्तुषु ॥
तावत् प्रीतिं परित्यज्य स्वस्थो भव सुनिर्मलः ।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्[3] ॥
अभिमानो हि सर्वेषां सर्वदुःखस्य कारणम् ।
मनोवृत्तिविहीनस्य स्वरूपेण स्थितस्य च ॥
कार्यं वेद्यं च प्राप्यं च नास्ति नास्ति कदाचन ।
स्वपौरुषैकसाध्येन स्वेप्सितत्यागरूपिणा ।
मनः प्रशममात्रेण विना नास्ति शुभा गतिः ॥

शिष्यः—

उपासनाप्रकारं च श्रोतुमिच्छामि सत्तम ।

॥ उपासनम् ॥

गुरुः—

उपासना द्विधा प्रोक्ता सगुणा निर्गुणा तथा ।
भावना प्रतिमादौ या सगुणा सा प्रकीर्तिता ॥

---

1. विवेकचूडामणिः ११
2. अस्मि - भविष्यसि इति भावः ।
3. भगवद्गीता – ६-२६

स्वस्मादन्यं यदाऽऽत्मानं यावत् पश्यति मानवः ।
सगुणोपास्तिरेव स्याद्भेदबुद्धिश्च सा द्विज ॥
स्वस्वरूपानुसन्धानं निर्गुणोपास्तिरुच्यते ।
पूर्वं चोपास्यते येन सगुणस्तद्बुभुत्सुना[1] ।
तस्यैव निर्गुणोपास्तिस्सिद्ध्यतीत्यवधारय ॥
पाषाणलोहमणिमृण्मयविग्रहेषु
पूजापुनर्जननभोगकरी मुमुक्षोः ।
तस्माद्यतिः [2]स्वहृदयार्चनमेव कुर्यात्
बाह्यार्चनं परिहरेदपुनर्भवाय ॥
एवं यतिर्मुमुक्षुश्च कुर्यान्निर्गुणभावनाम् ।
सगुणा भावना या स्यात् सा पुनर्जन्मकारणम् ॥

शिष्यः—

मोक्षो मम कथं भूयात् तन्मे ब्रूहि दयानिधे ।

॥ कामादित्यागः ॥

गुरुः—

वेदान्तसिद्धान्तनिरुक्तिरेषा
ब्रह्मैव जीवः सकलं जगच्च ।
अखण्डरूपस्थितिरेव मोक्षो
ब्रह्माद्वितीयं श्रुतयः प्रमाणम् ॥

---

1. तद्बुभुत्सुना - निर्गुणब्रह्मबुभुत्सुना
2. स्वहृदयार्चनं - स्वहृदये निर्गुणब्रह्मध्यानम् ।

यावत् सर्वं न सन्त्यक्तं तावदात्मा न लभ्यते ।
सर्ववस्तुपरित्यागे शेष आत्मेति कथ्यते ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥
तस्मात्तानव[1]माशायाः कार्यमादौ मुमुक्षुभिः ।
आशया परमं दुःखं निराशा परमं सुखम् ॥
इति लोके तु सर्वत्र वदन्ति च विवेकिनः ।
अरिषड्वर्गमध्ये हि कामः प्राथमिकः खलु ॥
स एष क्रोधरूपस्स्याद्रजोगुणसमुद्भवः[2] ।
तस्मादादौ स च त्याज्यः शेषास्त्यक्ता भवन्ति च ।
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्[3] ।
यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुभिः ॥
कामक्रोधादयश्चोरा देहे तिष्ठन्ति सर्वदा ।
ज्ञानरत्नापहारार्थं तस्मात् तान् परिवर्जयेत् ॥

---

1. तानवं - सूक्ष्मत्वं दौर्बल्यमिति यावत् ।
2. काम एष क्रोध एष रजोगुणसमुद्भवः [भगवद्गीता ३-३७]
इति वाक्यमर्थतोऽनुवदति— स एष काम इति ।
काम एव केनचित् हेतुना प्रतिहतः क्रोधत्वेन परिणमते;
अतः क्रोधोऽपि एष काम एव ॥
3. ब्रह्मबिन्दूपनिषत्-२

ध्यानतो हृदयाकाशे चिति चिच्चक्रधारया[1] ।
मनो मारय निश्शङ्कं त्वां प्रबध्नन्ति नारयः[2] ॥
सङ्कल्पमेव मनसः जन्मदुःखस्य कारणम्[3] ।
तस्मान्मा कुरु सङ्कल्पं सर्वथा बन्धकारणम् ॥

शिष्यः—

न चेत् सङ्कल्पकलना त्वशनादि कथं भवेत् ।

गुरुः—

चतुस्साधनयुक्ताय त्वेतच्छास्त्रं प्रयुज्यते ।
विषये दृश्यवस्तूनां मनो यस्य प्रवर्तते ॥
शमादिषट्कसंपत्तिर्यस्य नास्ति तथाविधाः ।
अज्ञाश्शास्त्रस्य चैतस्य नाधिकारिण एव ते ॥
वैराग्यभाग्ययुक्तस्य न चास्त्यशनचिन्तनम् ।
सदात्मनिष्ठया ज्ञानी कालं नयति च आ मृति ॥
तस्याहारादिकार्याणि करोति स्वयमीश्वरः ।
तस्मादाहारविषये चिन्ता मास्तु कदाचन ॥

---

1. चिति मनः चिच्चक्रधारया मारय इत्यन्वयः ।
   चिन्मात्रविषयकध्यानेन मनोनाशं कुरु इत्यर्थः ।
   चिच्चक्रधारया - चिद्विषयकं ध्यानमेव चक्रं सुदर्शनास्त्रम्,
   तस्य धारया अग्रभागेन इत्यर्थः ।
2. अरयः - कामादयः शत्रवः ।
3. कारणं इति - विदुरिति शेषः ।

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्"[1] ॥
इति गीतावचो रीत्या तादृशानां विवेकिनाम् ।
योगक्षेमं च भगवान् वहति स्वत एव तु ॥
अस्मिंश्च विषये गाथा कल्याणी काचिदस्ति हि ।
लौकिकीं तां प्रवक्ष्यामि शृणु त्वं सावधानतः ॥
आस्तां विप्रवरौ पूर्वं भ्रातरौ सुव्रतौ तयोः ।
ज्येष्ठो वैराग्यसंपन्नः तपश्चक्रे नदीतटे ॥

अनन्यचित्तस्सततं भगवन्तं हरिं स्मरन् ।
तस्य भार्याऽतिसाध्वी च पतिशुश्रूषणे रता ।
कनिष्ठभ्रातृपत्न्या तु दत्तं चादाय सा प्रिया ।
पक्त्वा तु तण्डुलाद्याशु पत्यागमनमीक्षते ॥
मध्याह्नकाले संप्राप्ते पतिरायाति तद्गृहम् ।
गृहं प्रत्यागते तस्मिन् पक्वान्नादीनि सा प्रिया ॥
समर्पयति, तद्विप्रः कृत्वा भगवदर्पणम् ।
स्वयं भुक्त्वा तपस्तेपे नदीतीरे यथासुखम् ॥
एवं स प्रत्यहं कुर्वन् वसति स्म महायशाः ।
गतेषु बहुवर्षेषु भ्रातृभार्या त्वसूयया ॥
एकस्मिन्नह्नि संभारान्नादात् तूष्णीं स्थिता च सा ।
ज्येष्ठस्य भार्या साध्वी तु विना पाकं स्थिता च सा ॥

---

1. भगवद्गीता - ९-२२

मध्यान्हकाले संप्राप्ते पत्यौ स्वगृहमागते ।
ज्ञात्वा पत्न्या च वृत्तान्तं नदीं तूर्ष्णीं गतोऽव्यथः ॥
पुनः परेऽहनि प्राप्ते मध्याह्वे गृहमागतः ।
तस्मिन्नपि तथैवासीदन्नाभावस्ततस्स तु ॥
आत्मन्येव समालोच्य गीताशास्त्रं समानयत् ।
"अनन्याश्चिन्तयन्तो मां"[1] इति श्लोकं विलोक्य सः ॥
नायं भगवता प्रोक्तः एवं भावोऽपि तस्य न ।
इति मत्वा द्विजश्रेष्ठः श्लोकं तं प्रविमार्जयन् ॥
स पुनस्तीरमासाद्य तपश्चक्रे सुदुष्करम् ।
गते तस्मिंस्तपस्तप्तुं भगवान् विश्वभावनः ॥
तपोनिष्ठस्य विप्रस्य ज्ञात्वा कर्म सुदुष्करम् ।
आरोप्य सर्वसंभारान् शकटेषु बहुष्वहो ॥
विप्रस्य गृहमासाद्य संभारांश्च धनादिकान् ।
दत्वा विप्रस्य भार्यायै झटिति प्रययौ हरिः ॥
सद्यः पतिं समाहूय जगादोदन्तमादितः ।
तत्क्षणादेव सा साध्वी पक्वान्नं व्यञ्जनादिकम् ॥
दर्शयामास संभारान् धनादीन् बहुसंपदः ।
सर्वं भगवतः कृत्यमिति ज्ञात्वा तपोधनः ॥
गीताशास्त्रं समानीय तं श्लोकं पुनरालिखत् ।
ततस्त्वन्नादिकं प्राश्य तपस्तप्तुं ययौ पुनः ॥

1. भगवद्गीता-९-२२

तथैवानन्यचित्तस्य नास्ति नास्त्यन्नचिन्तनम् ।
सोऽनन्यचित्तस्सततं स्वस्वरूपेण संस्थितः ॥

शिष्यः—

अध्यासः कीदृशः स्वामिन् तं प्रकारं गुरो वद ।

गुरुः—

यथा शुक्तौ तु रजतं रज्जौ सर्पो यथा तथा ।
"अतस्मिन् खलु तद्बुद्धिरध्यासः" [1]परिकीर्तितः ॥
रजतादीनां तु शुक्त्याद्यधिष्ठानं यथा तथा ।
जीवेश्वरादिजगतां ब्रह्म अधिष्ठानमुच्यते ॥
कालत्रयेऽपि शुक्तौ तु नास्त्येव रजतं तथा ।
रज्जौ सर्पादि नास्त्येव भ्रान्त्या कल्पनमेव तत् ॥
तथा जीवो जगत्सर्वं नास्ति कालत्रयेऽपि च ।
तत्सर्वं कल्प्यते भ्रान्त्या परे ब्रह्मणि मायया ॥

शिष्यः—

जीवेशादिजगत्सर्वं प्रत्यक्षत्वेन दृश्यते ।
न मे भ्रान्तिः काचिदपि कल्पना च कथं भवेत् ॥

गुरुः—

स्वप्ने दृष्टं जगद्यावत् तत्किं पश्यसि जागरे ।
तथैवेदं जगन्मिथ्या जगन्नास्त्येव सर्वथा ॥

---

1. अध्यासो नाम अतस्मिंस्तद्बुद्धिः - अध्यासभाष्यम् ।

शिष्यः—

स्वप्ने दृष्टं जगत्सर्वमदृष्टत्वाच्च जाग्रति ।

मिथ्यैव स्यात् दृश्यमिदं जगन्मिथ्या कथं भवेत् ॥

गुरुः—

संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः ।

स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत्[1] ॥

इति स्मृत्या ज्ञानवान् यस्तस्य मिथ्यैव नान्यथा ॥

शिष्यः—

कथं नश्यति तद्ब्रूहि रज्जुसर्पादिवद्भ्रमः ।

गुरुः—

दृष्ट्वा वक्रस्थितिं रज्जुमयं सर्प इति भ्रमः ।

जायते यस्य तु भृशं दृष्ट्वाऽन्यो बुद्धिमांस्तदा ।

नायं सर्पो रज्जुरिति रज्जुमुद्धृत्य लीलया ।

दर्शयित्वा च भीताय तस्य हस्ते ददाति तम् ॥

दृष्ट्वा स भीतस्तं रज्जुं भयान्मुक्तः प्रयाति सः ।

तथा ब्रह्मणि चाज्ञानात् जगद्भ्रान्तिः प्रजायते ॥

गुरूपदिष्टवाक्येन ज्ञानी भूत्वा ततः क्रमात् ।

जगन्नास्तीति निश्चित्य सर्वं ब्रह्मेति भावयेत् ॥

स जीवन्नेव मुक्तः स्यात् स धन्यः स महान् भुवि ॥

---

1. आत्मबोधः - ६.

शिष्यः —

रज्जुसर्पेण भीतस्तु रज्जुं ज्ञात्वा ततो भयात् ।
सद्यो मुच्येत, तद्वच्च ज्ञानं प्राप्यापि मानवः ॥
पुनस्सञ्जातमोहस्तु संसारे च विमुह्यति ।
पण्डितोऽपि तथैवास्ते कथं जानामि तद्विधाम् ॥

गुरुः—

अविद्वानपि विद्वान्वा गुरोः कारुण्यवीक्षणात् ॥
जातं चेद्ब्रह्मविज्ञानं तत्क्षणादेव मुच्यते ॥
न करोति पुनः प्रीतिं स वै सर्वेषु वस्तुषु ।
गुरुणा लब्धलक्ष्यात्तु न कदापि चलिष्यति ॥
सर्पभ्रान्त्या मुक्त इव ब्रह्मज्ञोऽपि विमुच्यते ।
केचिद्ब्रह्मविदस्सम्यक् ब्रह्म ज्ञात्वापि संसृतौ ।
वर्तन्ते च तथैवाऽपि न लिप्यन्ते हि संसृतौ ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा[1] ॥
यावद्भ्रमति संसारे पण्डितः श्रुतवानपि ।
तावद्धि ब्रह्म याथार्थ्यं न वै वेदेति निश्चिनु ॥

शिष्यः—

जीवन्मुक्तिः कथं स्वामिन् भविष्यति गुरो वद ।

---

1. पूर्वश्लोकोक्तेऽर्थे गीतां प्रमाणयति - ब्रह्मणीति [भगवद्गीता ५-१०]

॥ जीवन्मुक्तिः ॥

गुरुः—

अनेकजन्मसञ्जातपुण्यपुञ्जविशेषतः ।
चतुस्साधनसंपन्नो गुरुवाक्यप्रसादतः ॥
स्वकल्पितचतुर्विंशत्तत्त्वजालं विहाय च ।
षड्विंशकोऽहमात्मेति जीवाख्यः पञ्चविंशकः[1] ॥
निश्चित्य सम्यक् सुकृती जीवन्मुक्तो भविष्यति ।
तस्मात् सर्वेषु कालेषु जीवात्मैक्यं दृढं कुरु ॥
देहोऽहमिति विज्ञानं जन्मदुःखस्य कारणम् ।
नाहं देहः परात्मेति ज्ञानं दुःखस्य नाशनम् ॥
सर्वं ब्रह्मेति यस्यान्तर्भावना सा हि मुक्तिदा ।
भेदबुद्धिरविद्येयं सर्वथा तां परित्यज[2] ॥

शिष्यः—

स्थितिं विदेहमुक्तस्य ब्रूहि पुण्यवतां वर ।

---

1. स्वकल्पितं जडवर्गं चतुर्विंशतत्त्वात्मकं अनात्मा इति निरा-कृत्य तद्विलक्षणः पञ्चविंशोऽहं स्वभिन्नषड्विंशत्वेन प्रतीय-मानः परमात्मैव; निष्प्रपञ्चब्रह्मैवाहं इति यावत् ॥

2. अविद्या हि अनर्थकारिणीति प्रसिद्धा । उक्तं च गीताभाष्ये-सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति । अज्ञानतस्तत्र पतन्ति केचित् ज्ञाने फलं पश्य यथा विशिष्टम् ॥ तस्मात् तां परित्यज इत्यर्थः ।

गुरुः—

जीवन्मुक्तश्च यो विद्वान् सर्वदा ब्रह्मनिष्ठया ।
कालान्तरे स वै देहमुक्तो भवति वै द्विज ॥
सोऽयं ब्रह्म वरिष्ठस्स्यात् स्वरूपेणैव संस्थितः[1] ।
तस्य नास्ति जगद्दृष्टिः सर्वं ब्रह्मैव पश्यति ॥
कार्यकरणसङ्घातदेहस्य स्फुरणं तथा ।
क्षुदादि स्फुरणं वाऽपि जगतः स्फुरणं तथा ॥
शब्दादिग्रहणं वाऽपि नास्ति तस्य कदाचन ।
देहस्य स्फुरणाभावाद्विदेही मुक्तिरिष्यते ॥
देहस्य पातपर्यन्तं देहसंरक्षणं स्वतः ।
भविष्यति न सन्देहः साक्षाद्ब्रह्मैव तादृशः ॥
तस्य दर्शनमात्रेण शुद्धो भवति मानवः ।
स्थितिकाले तु देहस्य वरिष्ठस्य महात्मनः ॥

---

1. निर्विकल्पसमाधिस्तु भवेदत्र त्रिभूमिकः ।
व्युत्तिष्ठते स्वतस्त्वाद्ये द्वितीये परबोधितः ॥
अन्ते व्युत्तिष्ठते नैव सदा भवति तन्मयः ।
एवंभूतो ब्राह्मणः स्याद्वरिष्ठो ब्रह्मवादिनाम् ॥
गुणातीतः स्थितप्रज्ञः विष्णुभक्तश्च कथ्यते ।
अतिवर्णाश्रमी जीवन्मुक्त आत्मरतिस्तदा ।
एतस्य कृतकृत्यत्वात् शास्त्रमस्मान्निवर्तते ॥ —गूढार्थदीपिका.

प्रारब्धानुभवः कश्चिदपि नास्ति न संशयः ।

शरीरस्मरणाभावात् प्रारब्धानुभवः कुतः ।

प्रारब्धं पुष्यति वपुः देहस्थानुभवस्ततः ॥

शिष्यः—

ब्रह्मणो नित्यबुद्धस्य कथं जीवत्वसंभवः ।

गुरुः—

ब्रह्मणो नित्यबुद्धस्य नास्ति जीवत्वसंभवः ।

जीवेशादि जगत्सर्वं मायामात्रं भवेद्द्विज ॥

नान्यश्च ब्रह्मणो जीवः सर्वं ब्रह्ममयं जगत् ।

नाहं जीव इति ज्ञाते महावाक्यप्रमाणतः ॥

भविष्यति स्वयं ब्रह्म नात्र कार्या विचारणा ॥

शिष्यः—

ब्रह्मज्ञानं कथं सम्यक् जायते वद मे गुरो ।

गुरुः—

" सर्वत्र सर्वतः सर्वं ब्रह्ममात्रावलोकनम् ।

सद्भाववासनादार्ढ्यात् "[1] ब्रह्मज्ञानं प्रजायते ॥

ब्रह्मविज्ञानसंपन्नः प्रतीतमखिलं जगत् ।

पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥

---

1. विवेकचूडामणिः – ३१७.
   सर्वं ब्रह्ममात्रावलोकनं - सर्वं ब्रह्म इति अवलोकनम् ।

स्वात्मनोऽन्यतया भातं चराचरमिदं जगत् ।
स्वात्ममात्रतया बुद्ध्वा तदस्मीति विभावय ॥

सर्वव्यापारमुत्सृज्य अहं ब्रह्मेति भावय ।
अहं ब्रह्मेति निश्चित्य अहंभावं परित्यज ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः[1] ॥

बहुनोक्तेन किं विप्र वाचो विग्लापनं हि तत् ।
सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥

शिष्यः—

कथं ध्यायाम्यहं ब्रह्म ब्रूहि मे गुरुपुङ्गव ।

गुरुः—

यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ।
यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥

एवं यद्यदिन्द्रियैस्स्याद्ग्राह्यं सर्वप्रपञ्चकम् ।
आत्मेति भावय सदा सर्वं ब्रह्ममयं जगत् ॥

ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ।
जगद्रूपतयाऽप्येतद् ब्रह्मैव प्रतिभासते ॥

---

1. भगवद्गीता - १८-६६

शिष्यः—

दृश्यं जगद्भिन्नाऽऽस्यं तत्कथमात्मेति भावये ।

गुरुः—

ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।
कर्माण्यपि समग्राणि भासन्तीवेति भावय ॥

ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः ।
तस्मादेतानि ब्रह्मैव भवन्तीति विचिन्तय ॥

घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ।
जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥

मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ।
जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥

इत्यादिभिस्तु श्रुतिभिः जगद्ब्रह्मेति निश्चिनु ।
अखण्डाकारसद्वृत्त्यां नान्यद्भाति कदाचन ॥

सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ।
स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते[1] ॥

देहेन्द्रियप्राणमनोऽहमादिभिः
स्वाज्ञानक्लृप्तैरखिलैरुपाधिभिः ।
विमुक्तमात्मानमखण्डरूपं
पूर्णं महाकाशमिवावलोकयेत् ॥

---

1. सर्वावस्थास्वपि आत्मैव वस्तुसन् इति भावः ॥

आकाशवन्निर्मलनिर्विकल्प-

निस्सीमनिःस्पन्दननिर्विकारम् ।

अन्तर्बहिश्शून्यमनन्यमद्वयं

स्वयं परं ब्रह्म किमस्ति बोध्यम् ॥

जाग्रत्युद्भूतबाह्येन्द्रियविषयसमुल्लाससाक्षी शिवोऽहं

स्वप्ने दृष्टप्रपञ्चप्रतिफलनमनोवृत्तिसाक्षी शिवोऽहम् ।

सुप्तौ चित्ते प्रलीने प्रबलतमसहामोहसाक्षी शिवोऽहं

नित्यानन्दे तुरीये विगतकलिमलः सर्वसाक्षी शिवोऽहम् ॥

यच्चैतन्यमनुस्यूतं जाग्रत्स्वप्नसुषुप्तिषु ।

तदेव त्वमिदं तत्त्वमितो नास्त्यधिकं पदम् ॥

एकं ब्रह्म चिदाकाशं सर्वात्मकमखण्डितम् ।

इति भावय यत्नेन चेतश्चाञ्चल्यशान्तये ॥

एवं निरन्तराभ्यासाज्जगद्विस्मृत्य सर्वतः ।

ब्रह्मभावनमात्रेण ब्रह्मैव भवति ध्रुवम् ॥

काञ्चीक्षेत्रे तु पूर्वं परमशिवसमः कुम्भजोऽगस्त्य आसीत्

दिव्ये तस्याश्रमान्ते प्रथित उपनिषद्ब्रह्मयोगीन्द्रवर्यः ।

शालां निर्माय सम्यग्बहुदिनमवसत्तस्य शिष्यप्रशिष्यः

श्रीमद्योगीन्द्रवर्यो विलसति स महादेवसंज्ञो यतीन्द्रः ॥

स महान्मे गुरुस्तस्य दश शिष्या मया सह ।

दशावृत्तिः कृता तेन काशीयात्रा महात्मना ॥

क्षीरनद्यास्तटे क्षेत्रे विरिञ्चिपुरसंज्ञके ।

शिवलिङ्गप्रतिष्ठा च कृता तेन महात्मना ॥

तस्मै परमहंसाय महादेवेन्द्रयोगिने ।

शिष्याज्ञानतमोध्वंसभास्कराय नमो नमः ॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-

श्रीमहादेवेन्द्रयतिवराणामन्तेवासिना

श्रीमदनन्तेन्द्रेण यतिना

विरचितोऽयं वेदान्तसारसंग्रहः[1] ॥

* ॥ समाप्तोऽयं ग्रन्थः ॥ *

---

1. वेदान्तसारसंग्रहः - वेदान्तानां - उपनिषदां, सारः - अज्ञाताबाधितप्रयोजनवत्तायातात्पर्यविषयोऽर्थः, तस्य संग्रहः— प्रतिपादकः संक्षिप्तवाक्य समुदायः ॥

चोलेषु गङ्गाधिकपुण्यशीला कवेरजा नाम नदी प्रसन्ना ।
या शूरदैत्याधिपपीडितानां नाकौकसां तापमपाचकार ॥
तस्याश्शाखास्वनन्तासु विश्रुता श्रीहरिश्रुता ।
तटिनी स्वर्धुनीतुल्यसलिलार्णवगामिनी ॥
तस्यास्तटे नैगमधर्मकर्मपरैर्द्विजैरध्युषितोऽग्रहारः ।
विष्णुःसमाराध्य हि तेजिनीशं यत्रोपलेभे पुनरात्महेतिम् ॥
ततस्तन्नामतो लोके भाति विष्णुपुराभिधः ।
ग्रामोऽग्राम्यसमाचारैराश्रितो वेदपारगैः ।
तत्र गर्भश्रियाजुष्टे आश्रितार्थिजनप्रिये ।
श्रद्धाविनयसम्पन्ने कुले सर्वगुणोत्तमे ॥
जातः श्रीतेजिनीनाथापरनामा द्विजाग्रणीः ।
वीळिनाथो यजुश्शाखाध्यायी गुरुजनप्रियः ॥

श्रीकामकोष्ठवरपीठजुषां गुरूणां
पादारविन्दमकरन्दरसैकजीवी।
तत्प्रेमपूर्णवचसा निगमान्तविद्या-
मध्यैत पण्डितवरान्तिकमेत्य भक्त्या॥
श्रीकामकोटिपीठेशनिर्देशमनुपालयन्।
चेन्नपुर्यां विश्वविद्यालयेऽध्यात्मविभागके।
स्वयं शिष्योऽपि वेदान्ताध्यापकत्वमुपेयिवान्॥
'शिरुवामणि' वास्तव्यं षड्दर्शनविदां वरम्।
श्रीकृष्णमूर्तिशास्त्रीन्द्रमात्मविद्यागुरुं श्रितः।
शिष्ये बद्धानुरागस्य शास्त्रिवर्यस्य धीमतः।
प्रसादेनैव वेदान्तसारसङ्ग्रहनामकम्।
यथामति विचार्याथ शोधयित्वा च सर्वशः।
टिप्पण्या योजयन् युक्तिपूर्णयुक्तार्थगर्भया॥

लसच्चेन्नपुर्यां महाविश्वविद्या-
लयेऽध्यात्मविद्याविभागाधिनाथे।
ज्वलत्कामकोटीमहापीठनाथ-
प्रिये शान्तभावे महादेव नाम्नि॥
निबद्धानुरागः कृतज्ञोऽस्य षष्ट्य-
ब्दपूर्त्युत्सवे प्रेमभाजां वराय।
विशिष्टं पुरस्कारमेतं समर्प्य
कृतार्थत्वमेति प्रमोदादमुष्मै॥

बुद्धिमान्द्यादथालस्यात्तथा शब्दार्थदुर्ग्रहात्।
नूनं प्रमादो भवति क्षम्यतामेष सज्जनाः!॥

॥ शुभं भूयात् ॥